उपधायाश्च । उदोष्ठ्यपूर्वस्य । वहुलंछन्दसि ॥ ६ ॥ युवोरष्टाभ्योलोपोरधिशप्श्यनोरुपधायास्त्रीणि ॥ इतिसप्तमा
ध्यायेप्रथमःपादः ॥ १ ॥ ७ ॥ सिचिवृद्धिःपरस्मैपदेषु । अतोल्रान्तस्य । वदव्रजहलन्तस्याचः । नेटि । ह्म्य
न्तक्षणश्वसजागृणिश्व्येदिताम् । ऊर्णोतेर्विभाषा । अतोहलादेर्लघोः । नेड्वशिकृति । तितुत्रतथसिसुसरकसेषुच ।
एकाचउपदेशेऽनुदात्तात् । श्र्युकःकिति । सनिग्रहगुहोश्च । कृसृभृवृस्तुद्रुस्रुश्रुवोलिटि । श्वीदितोनिष्ठायाम् ।
यस्यविभाषा । आदितश्च । विभाषाभावादिकर्मणोः । क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टवाढानिमन्थमन
स्तमःसक्ताविस्पष्टस्वरानायासभृशेषु । धृषिशसीवैयात्ये । दृढःस्थूलवलयोः ॥ १ ॥ प्रभौपरिवृढः । कृच्छ्रगहनयोः
कषः । घुषिरविशब्दने । अर्देःसंनिविभ्यः । अभेश्चाविदूर्ये । णेरध्ययनेवृत्तम् । वादान्तशान्तपूर्णदस्तस्पष्टच्छन्न
ज्ञप्ताः । रुष्यमत्वरसंघुषास्वनात् । हृषेर्लोमसु । अपचितश्च । हृह्वरेश्छन्दसि । अपरिह्वृताश्च । सोमेह्वरितः ।
ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्वलितिक्षरितिवमित्यमि
तीतिच । आर्धधातुकस्येड्वलादेः । स्नुक्रमोरनात्मनेपदनिमित्ते । ग्रहोऽलिटिदीर्घः । वृतोवा । नलिङि । सिचि
चपरस्मैपदेषु ॥ २ ॥ इट्सनिवा । लिङ्सिचोरात्मनेपदेषु । ऋतश्चसंयोगादेः । स्वरतिसूतिसूयतिधूञूदितोवा ।
रधादिभ्यश्च । निरःकुषः । इण्निष्ठायाम् । तीषसहलुभरुषरिषः । सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।